



॥ श्रीः ॥

श्रीमत्परमहंसपरिव्राजकाचार्यवर्य
श्रीमच्छङ्करभगवत्पाद प्रतिष्ठित
श्रीकाञ्चीकामकोटिपीठाधिप जगद्गुरु
श्रीमच्चन्द्रशेखरेन्द्रसरस्वतीश्रीपादैः

अस्मदत्यन्तप्रियशिष्याङ्कुरे रङ्गस्वामिशास्त्रिविषये सर्वाभीष्टसिद्ध्यै क्रियते नारायणस्मृतिः ॥

भवता विरच्यास्मत्सन्निधावुपहारीकृतं स्रग्धराभागवताख्यं ग्रन्थं साक्षात्कृत्य सुतरां सन्तुष्यामः। सोऽयं श्रीमद्भागवतसारभूतः अनुज्झितविषयव्रातः सङ्ग्रहतः श्रीमद्भागवतकथाजिज्ञासूनां अतितरामुपकुर्यादिति मन्महे।

एवं भक्तजनात्यन्तोपयोगिग्रन्थरत्नरचयिता भवान् श्रीचन्द्रमौळीश-
कृपया श्रेयांस्यवाप्नुयादित्याशास्महे ॥

मुकाम् कुम्भघोणम्.
प्रमाथिसं० अधिक श्रावण
कृ० ६ ॥

नारायणस्मृतिः।

## OPINION GIVEN BY

Mahamahopadhyaya, Vidyavachaspati,

## S. KUPPUSWAMI SASTRI, M. A., I. E. S.,

Retired Professor of Sanskrit and

Comparative Philology, Presidency College

And

Retired curator, Government Oriental

Manuscripts Library, Madras.

At present

Honorary Professor of Sanskrit, and Dean of the

Faculty of Oriental Studies,

Annamalai University.

I have heard portions of the metrical summary of the **Srimad-Bhagavata** and the **Brahmasutra-Bhashya** (Śankara), read out to me by the author Brahmasri **A. R. Rengaswami Sastrigal,** who is a profound scholar in Advaita and Sahitya. These metrical summaries are good and sure to prove to be reliable aids to those who wish to study and appreciate the Bhagavata and the Sutra-Bhashya.

These summaries deserve to be printed and published; and their author deserves a very generous encouragement at the hands of all patrons and lovers of Sanskrit learning.

(Camp)
Ganapathi Agraharam,
(Via) Ayyampet, Tanjore Dt., S. I. Ry.
(18th June, 1939).

**(Sd.) S. Kuppuswami Sastri**

# प्रशस्तिपत्रिका ॥

शास्त्ररत्नाकर, शास्त्रतिलकादि बिरुदालङ्कृतानां, अद्वैतसभापण्डितवराणां, ब्रह्मश्रीयुत महामहोपाध्याय यज्ञस्वामिशास्त्रिणाम्—

श्रीमद्भागवतं निरर्गलगलत्पीयूषधारायितं
गीतं यन्मुनिना शुकेन जगतां क्षेमाय कारुण्यतः ।
तत्सारोद्धरणीं सुबोधसरणिं दृष्ट्वा मनोहारिणीं
रङ्गस्वामिमनीषिणा विरचितां मोदामहे स्रग्धराम् ॥
नन्दनन्दनकल्याणलीलानुक्रमशंसिनीम् ।
कृतिमालोक्य यज्ञेशः प्रादात्सम्मतिपत्रिकाम् ॥

कुम्भघोणम्, 13—6—39. (Sd.) यज्ञस्वामि शास्त्री.

भारतसिंहं, विद्याभूषणं, महामहोपाध्याय बिरुदभूषित मध्वशास्त्रसम्पन्न ब्रह्मश्री खापे. रामचन्द्राचार्याणाम्—

सुब्रह्मण्याभिधानैः प्रथितनिजगुणैः स्थापिता कुम्भघोणे
विद्याशाला विभाति श्रितजनमहिताऽद्वैतनिष्ठा तदीशैः ।
रङ्गस्वाम्यार्यवर्यैर्विरचितमधुना वीक्ष्य दिव्यं पुराणं
कृष्णेष्टं स्रग्धराभं सुखमुनिमतगो मोदते रामचन्द्रः ॥

कुम्भघोणम्, 19—6—39 (Sd.) खापे. रामचन्द्राचार्यः.

अभिनवभट्टबाण शब्दतर्कालङ्कारविद्याभूषितानां पण्डितराजानां महामहोपाध्यायानां श्री. उभ. वे. कृष्णमाचार्याणाम्—

व्यासापत्यं वितेने जगति जनिमतां श्रेयसे यत्पुराणं
सारं सङ्गृह्य तस्य स्वरसपदगतिन्यासहृद्यैः स्वपद्यैः ।
आराध्नोतिस्म नूनं विविदिषुसुजनस्वान्तमत्यन्तभक्तिः
श्रीरङ्गस्वामिविद्वन्मणिरिति मनुते नूतनो भट्टबाणः ॥
यद्वेदार्थसमर्थनाय भगवानाहस्म वैयासकिः
सारं तस्य समग्रहीदनुगुणैः पद्यैरवद्योज्झितैः ।
रङ्गस्वामिबुधः सएष विदुषां तोषं परं पुष्यति
ग्रन्थः सुष्ठु विमृष्ट इत्यभिनवो बाणः स्वयं मन्यते ॥

कुम्भघोणम्, 7—7—39. (Sd.) रा. च. वि. कृष्णमाचार्यः.



# विज्ञापना ।

अयि भोः ! आस्तिकशिखामणयः—

सुविदितमेवेदं सर्वेषामपि यदुत; श्रीमद्भागवतं नाम पुराणरत्नं शुकमुनिना परीक्षिते समुपदिष्टं परमहंससंहितेति व्यपदिश्यमानं अष्टादशपुराणान्तर्गतं शुश्रूषुजनानां हृदये तत्क्षणादेव भगवदवरोधकरं भक्तेर्वर्धकं सप्ताहश्रवणेनैव सकलदुरितमुन्मूल्य ज्ञानद्वारा मोक्षप्रदानपटिष्ठश्च विजयत इति ॥

तस्यच अष्टादशसहस्रग्रन्थसंमितस्य प्रायशोऽनुसन्धातुमसुलभतामवेक्ष्य अनारतं गृहपुत्रकलत्रवित्तादिषु अभिनिविशमानानामथापि तदनुसन्धित्सतां यथा सर्वाऽपि कथा मुहूर्तेन सुखानुसन्धेया भवेत् तथा कमप्युपायमाचरितुमस्मि प्रेरितो भगवता ॥

यद्यपि आर्याभागवतं, भागवतस्कन्धसङ्ग्रहः, श्रीधरीयः अध्यायार्थसङ्ग्रहः इत्यादयः सन्ति तत्कथासङ्ग्राहका ग्रन्थाः । तथापि स्रग्धरावृत्तरूपपद्यशतकग्रथितां स्रजमिव कृतिमिमां कण्ठे धरन्तः शोभामन्यादृशीमाप्नुयुरखिलाश्च भगवद्भक्ताः इति प्रवृत्तोऽहमस्मिन्कार्ये। " यस्मिन् प्रतिश्लोकमबद्धवत्यपि " इति सूक्तिमनुसृत्य सद्वस्तुबहुमानात्परं सर्वैरादरणीयोऽयं प्रयत्नः इति प्रार्थये ॥

अत्रच सर्वथा मां प्रोत्साह्य मुद्राप्यच ग्रन्थं उपकृतवतां श्रीयुतानां श्रितवत्सलानां A. सुब्रह्मण्यार्यवर्याणां सन्निधे परां कृतज्ञतामुपहरामः । सबहुमानं एतत्परिशीलनादिभिरुपकृतवतां मान्यानां पण्डितवराणां च सप्रणामं बहून् धन्यवादान् समर्पयामः ॥

कुम्भघोणम्,
15—7—39.

आङ्गरै रा. रङ्गस्वामि शास्त्री,
राममन्दिरस्थाद्वैतवेदान्तपाठशालाध्यापकः.

॥ श्रीः ॥

॥ श्रीगुरुभ्यो नमः ॥

# ॥ स्रग्धरा भागवतम् ॥

श्रीगुरुचरणद्वन्द्वं हतनतबन्धं भजामहेऽद्वन्द्वम् ।
यत्खलु संसृतिसागरतारणपोतो विराजते भजताम् ॥ ॥१॥

परहंसरमणयोग्यं भागवतं भक्तिवर्धकं विदुषाम् ।
विषयविरक्तिविधायकमत्युज्ज्वलमात्मसौख्यदं जयति ॥ ॥२॥

तावद्ध्यन्यपुराणतन्त्रनिवहा गर्जन्त्यहंपूर्वकं
यावद्व्याससुतस्य वाक्यमनघं नाकर्णितं मुक्तिदम् ।
तावद्धस्तिघटा वितन्युरमितं स्वैरं स्वकं बृंहितं
यावन्नश्रुतिमेति सिंहकलितो गम्भीरनादः कियान् ॥ ॥३॥

अथ प्रथमः स्कन्धः ॥

विश्वं यस्माद्धि जातं स्थितिमुपगतवद्येन यत्रैव लीनं
यः प्रोचे वेदमादौ सरसिरुहभुवे यः स्वराट् सर्वसाक्षी ।
गायत्रीमन्त्रवेद्यं तमहमखिलधीप्रेरकं भावयेऽन्तः
सारं पद्यैर्निबध्नन् शुकमुनिवचसां स्रग्धरावृत्तहृद्यैः ॥ ॥१॥

आसीना ब्रह्मसत्रं बहुसममृषयो नैमिशे शौनकाद्याः
दृष्ट्वा सत्कृत्य सूतं बहुविदमनघं पृष्टवन्तः श्रुतीनाम् ।
सारः को विष्णुलीलाः कति कति च हरेर्मानुषाद्यावताराः
इत्यादि प्रश्नषट्कं स च परममदादुत्तरं तत्र पूर्वम् ॥ ॥२॥

सारः सर्वश्रुतीनां हरिपदभजनं सृष्टिरक्षालयाद्याः
तल्लीला रामकृष्णप्रभृतिबहुविधाश्चावतारास्त्वसङ्ख्याः ।
भूमेर्भारापहारः फलमथ मथुरानाथजन्मग्रहस्य
प्राप्ते वैकुण्ठमीशे शरणमुपगतो धर्म एतत् पुराणम् ॥ ॥३॥

सत्सङ्गादेव भक्तिर्भवति भगवतीत्यन्तिके सत्यवत्याः
सूनोरुक्त्वा सुरर्षेश्चरितमथ वदन्नौत्तरेयस्य जन्म ।
द्रौणेरस्त्रप्रमोक्षात्प्रभृति भगवतो गर्भरक्षान्तवार्तां
कुन्त्या भीष्मेण चैतद्विनुतिमथ विभोर्द्वारकायानमूचे ॥ ॥४॥
यत्र स्त्रीभिर्गताभिः स्वभवनशिखरं कृष्णसन्दर्शनेच्छा-
लोलाभिस्तस्य रूपं स्वनयनविषयं कुर्वतीभिर्नितान्तम् ।
अक्ष्णोः साफल्यमाप्तं यदुपतिसुदृशां पूर्वपुण्यं किमु स्यात्
ताभिः स्त्रीत्वं प्रकर्षं गमितमिति हरिः संस्तुतो विस्मिताभिः ॥५॥
विष्णोर्वैकुण्ठयानं विजयविलपनं विष्णुरताभिषेकं
पार्थस्वर्गाधिरोहं कलिविजयमुखं पाण्डुनप्तुश्चरित्रम् ।
शापं चाख्यत् शमीकव्रतिगळभुजगक्षेपणात्तस्य सूनोः
तीरे प्रायोपवेशं सुरसरित ऋषेश्चागमं स्कन्ध आद्ये ॥ ॥६॥

---

द्वैतीयीके विराजि प्रथममभिहिता स्थूलसन्धारणाऽथो
सूक्ष्मा चेतोविशोधिन्यकथि कमलभूनारदर्ष्योर्मुखेन ।
ब्रह्माण्डस्यापि सृष्टिस्तपतपवचना ब्रह्मणा खे समुत्थात्
विष्णोः श्लोकैश्चतुर्भिश्चरितविवरणं नारदव्यासमुख्यैः ॥ ॥७॥
येषु श्लोकेषु सर्वश्रुतिशिखरगिरां संगृहीतोऽस्ति सारः
स्वस्माद्भेदेन नैतत् सकलमपि जगत् भाति लब्धात्मकं वा ।
आभासा एव जीवाः प्रतिफलनजुषो ब्रह्मणो बुद्ध्युपाधौ
सृष्टिस्थित्यप्यया अप्यमतिविलसितं ब्रह्मजीवैकतेति ॥ ॥८॥

---

तार्तीयीके विशुद्धा प्रथममभिहिता वैदुरी तीर्थयात्रा
मैत्रेयेणास्य सङ्गस्तदनु च विविधप्रश्नतन्निर्णयोक्तिः ।
ब्राह्मी सृष्टिः प्रजानां किटितनुहरिणा पार्थिवी संप्रतिष्ठा
प्रोक्ता दिव्या कथा च श्रुतिमयसमहायज्ञवाराहमूर्तेः ॥ ॥९॥

वैकुण्ठद्वारपालौ किल जयविजयौ यौ सगर्भ्यौ त्रिवारं
भूमौ जातौ च शापात् सनकमुखकृतादित्यथो काश्यपस्य ।
सन्ध्याकालेपि पत्न्या रतिविषयकनिर्बन्धतस्तामसौ द्वा-
वुत्पत्स्येते सुतावित्यतिपरुषतमा शापवार्ता समूचे ॥ ॥१०॥
वार्ता स्वायम्भुवस्याप्यथ च मिथुनतो भावनोक्तिः प्रजानां
कन्यायाः कर्दमायार्पणमथ कपिलस्यावतारोऽप्यमुष्याम् ।
मात्रे साङ्ख्योपदेशो नवभिरथ शुभाध्यायवर्यैस्तदीयः
भक्तेः सिद्धेः प्रकर्षो भजनसरणिरप्यभ्यधायीश्वरस्य ॥ ॥११॥

---

तुर्ये दत्तावतारः परमशिवकथा दक्षयज्ञावसाना
यज्ञेशानुग्रहेणाध्वरवरगुणतापादनं तत्स्तुतिश्च ।
उत्तानाङ्घ्रेः पवित्रं चरितमथ शुभं ध्रौवमाख्यानमस्य
श्रीकान्तानुग्रहोक्तिः स्वविषयभरणं यक्षराट्सत्क्रिया च ॥१२॥
यश्चोत्तानाङ्घ्रिपुत्रोऽचकमत पितुरुत्सङ्गमन्यानुरोधि-
क्षोणीशोपेक्षितः स्वं कथमपि कुरुताद्धन्यमित्यम्बयोक्तः ।
श्रीमन्नारायणाङ्घ्रिं सुरमुनिवचसा चिन्तयन् मासषट्कात्
प्राप्य ध्रौवं पदं श्रीपतिभजनवशा न्मृत्युमूर्ध्न्यादधेऽङ्घ्रिम्॥१३॥
प्रश्नः प्राचेतसोऽथोत्कलमुखचरितं शान्तिरङ्गस्य राज्ञः
तद्धेतुर्वेनदौष्ट्यं मुनिभिरथ च वाग्वज्रतस्तस्य दाहः ।
पश्चादीशावतारः पृथुरिति सुकथा तस्य भूदोहनादिः
साक्षाद्विष्णोर्मुनीनामपि नरपतिनाऽध्यात्मसंवादवार्ता ॥१४॥
मोक्षस्तस्यार्चिषोऽपि स्वयमनुगमनं योगमाहात्म्यहेतोः
वंशे तस्मिन् जिताश्वप्रभृतिनृपतयः कीर्तितास्तत्सुताश्च ।
उद्वाहो मारिषायाः सकलभयहरं रुद्रगीतं प्रचेतः-
कीर्तिः प्राचीनबर्हिश्चरितमनु शुभा यत्र पौरञ्जनाख्या ॥१५॥

यत्राध्यात्मं परोक्षं वदति मुनिवरो जीवबुद्ध्यादिभावान्
बुद्धौ रूपान्तरेणाविकलसुलभतया आह्वयन् बन्धमुक्त्यै ।
बुद्धेः कार्यं समस्तं ननु चित इति तं बोधयन्नित्यमुक्तं
स्वाध्यस्तं बन्धमीपत्क्षयतनमथितं कुर्विति क्षेत्रिणं द्राक् ॥१६॥

बुद्धिः स्त्री यत्र जीवो नृपतिरपि वपुः पत्तनं बन्धुवर्गः
श्रोत्रादीनीन्द्रियाणि स्वविषयरमणं शर्म घस्रा निशाश्च ।
चारा मृत्योर्जरा तत्सहजनुरथ च व्याधयो दूतवर्गाः
मुख्यं मित्रं परेशस्तममृतमवयन्नेति बन्धाद्विमुक्तिम् ॥१७॥

---

वंशः प्रैयव्रतोऽथ प्रथममभिहितः पञ्चमे स्कन्ध एतत्-
पुत्रा नाभ्यादयश्चाप्यथ ऋषभमुनेः सच्चरित्रं पवित्रम् ।
यो हि द्वारं विमुक्तेर्महदभिगमनं योषितां सङ्गिसङ्गं
दुःखद्वारं जनेभ्यो व्यवृणुत सदसि प्राणिनां दुःखहत्यै ॥१८॥

पुत्रास्तस्याभवन् ये शतमिह भरतो नाम मुख्यस्तु तेषां
लेभे यस्त्वेणजन्म द्विजवरजनिमप्यन्ततो मुक्तिमेष्यन् ।
दैवाद्राहूगणीयोऽवहदथ शिबिकां तेन संप्रार्थितस्सन्
विद्यां संसारनौकां समुपदिशति तद्भक्तिहृष्टः स्म तस्मै ॥१९॥

जम्बूद्वीपादिमानं तदनु च सरितां पर्वतानां च संख्या
तत्तल्लोकेऽप्युपास्यो हरिरिति गुणतद्ध्यानतत्कर्तृभेदाः ।
चन्द्रादित्यादिमानं ध्रुवगतिरनघा शैंशुमारस्य वार्ता
तामिस्राद्याश्च पापाचरणफलमहायातनाश्चानुशिष्टाः ॥ ॥२०॥

---

सर्वाघानां विनाशं कलयति भगवन्नाम संकीर्तितं सत्
साक्षी चाजामिळाख्यो द्विज इति चरितं तस्य पुण्यं निरुक्तम् ।
योयं नारायणायेत्यपि निजतनयाह्वानमात्राद्धुताघः
दूतैर्नारायणीयैर्विजितयमभटै वैष्णवं धाम निन्ये ॥ ॥२१॥

वृत्राभिख्योऽपि दैत्यः सुनिशितकुलिशेनाहतो वज्रिणा श्री-
विष्णोर्वर्मप्रभावादपिच परिहृता वृत्रहत्येतिचोक्त्वा ।
त्वाष्ट्रं वृत्तंच वृत्रप्रथमजनिकथां वक्तुमारभ्य राज्ञः
पुत्राप्तिं तस्य नाशं गिरिशकृतकलिं सञ्जगौ चित्रकेतोः ॥२२॥
आदित्यानां प्रसङ्गादपि च जनिमथावोचदत्यद्भुतां तां
सप्तानां चापि दित्या व्रतहतिकरणात् सप्तसप्तत्वभाजाम् ।
देवत्वं प्रापितानां पुनरपि मरुतां तद्व्रतं चापि साङ्गं
प्रोचे षष्ठे महर्षिः श्रवणकुतुकिने विष्णुरताय राज्ञे ॥ ॥२३॥

---

भूयोऽपृच्छन्महर्षिं नृपतिरथ शुकं सप्तमे स्कन्धवर्ये
साम्ये सर्वत्र विष्णोरपि दितितनयेष्वेव का द्वेषितेति ।
शङ्कामेनां महर्षे हृदयविमथनीं छिन्धि सर्वात्मनेति
प्रोक्तश्चाहर्षिरेनं गुणकृतभिदया तारतम्यं स्वतो न ॥ ॥२४॥
एतत्प्रत्यायनार्थं सुरमुनिनिकटे धर्मजप्रश्नमाख्यत्
यत्रैवं धर्मसूनोर्विशयमपनुदन्नारदर्षिर्जगाद ।
प्रह्लादाख्यस्य दैत्याधिपतितनुभुवः पुण्यकीर्तेश्चरित्रं
यत्रस्तम्भान्नृसिंहोऽजनि निजजनवाक्सत्यतां संविधातुम् ॥२५॥
प्रह्लादाख्योहि भक्तो भगवदभिमतो जन्म लेभे हिरण्यात्
पित्रा द्रुग्धश्च विष्णोर्भजनमुपदिशन् बालकेभ्यश्च बाल्ये ।
नानोपायै जिघांसौ सति पितरि तदा स्तम्भमध्यात् सभाया
माविर्भूयावितोऽभूत् झटिति नृहरिणा दैत्यसंहारपूर्वम् ॥२६॥
रौद्रं चापीरयन् सन् त्रिपुरनिहननं विष्णुमायाविभूम्ने-
त्यस्माद्देवाच्च कोऽन्योऽस्त्यधिक इति दृढं साधयित्वा मुनीन्द्रः ।
अध्यायैः पञ्चभिश्चाप्यथ नरपतये प्रोक्तवान् धर्मभेदान्
देवर्षिर्यांश्चरन्तः सुविमलमनसो ज्ञानयोग्या जनाः स्युः ॥२७॥

स्कन्धे मन्वन्तराणां चरितमनुवदन्नष्टमे वारणेन्द्र-
स्योचे मोक्षं मुकुन्दाकलितमथ महाघोरनक्रेन्द्रवक्त्रात् ।
तत्तच्छापस्य हेतुं महदतिचरणं दुःखबीजं महर्षिः
तत्तीर्थध्यानसारं परिपठनफलं चाह दुःस्वप्ननाशम् ॥ ॥२८॥

एवं नागेन्द्रमोक्षं कलिमलमथनं प्रोच्य भूयोऽपि विष्णोः
भक्तानुग्राहकत्वं प्रथयितुममृतोत्पादनं तद्विवक्षुः ।
युद्धे दैवासुरे प्राक् हरिपरिकलितं देवतानां सुधायाः
माहात्म्यात् स्वस्थभावं सुरदितिसुतसन्धानपूर्वं जगाद ॥२९॥

रज्जुं कृत्वा फणीन्द्रं मथनगिरिमथो वैनतेयेन नीत्वा
कूर्मो भूत्वा महीभृच्चलनमपनुदंस्तच्छिरः स्तंभयंश्च ।
सर्पस्यान्तः प्रविश्य स्वयमथ बलमाधाय तस्मै दयालुः
मध्ये देवासुराणां स्वयमपि जलधिं निर्ममन्थासुरारिः ॥३०॥

यस्मिन्निर्मथ्यमाने सुरतरुसुरभिस्त्रीमणीभाश्वमुख्यान्
तांस्तानापुः स्म ते ते ह्यहमहमिकया निर्गते कालकूटे ।
श्रीकण्ठः प्रेक्ष्य गौरीमुखमधिकमुदा तत्पिबन् कुक्षिसंस्थान्
गोप्तुं कण्ठे नियच्छन् जयति सितरुचिर्यश्शिवो नीलकण्ठः ॥३१॥

तत्राविर्भूय लक्ष्मीः स्वमवृणुत पतिं पश्यतां देवदैत्य-
श्रीकण्ठश्रीदवाणीपतिवरुणमरुद्वह्निनाकाधिपानाम् ।
सोऽपि स्वस्यप्रियां दिव्यखिलमुरजभेर्यानकैर्वाद्यमानैः
सिद्धानां साधुवादैस्सह परिजगृहे वेदवादैर्मुनीनाम् ॥३२॥

रूपं धन्वन्तरेर्योऽवहदमृतघटं बिभ्रदम्भोरुहाक्षः
स्त्रीवेषं चाङ्गयकार्षीदरिमतिदळनायादिमः पूरुषोऽपि ।
पीयूषं देवताभ्यः परमथ वितरन् कामजेतारमीशं
मोहेनायोजयद्यः स दिशतु भगवान् सन्ततं मङ्गळं नः ॥३३॥

दैत्येन्द्रं स्थानतः स्वाच्च्युतमकृत बलिं मायया वामनो यः
रूपे त्रैविक्रमे यः शिरसि पदमधात्तस्य नैजं तृतीयम् ।
गीर्वाणेन्द्रक्षराजाब्जभव गवनुतः पादघातेन शुभ्रां
अभ्राम्भोवाहिनीं यो व्यतनुत भगवांस्तत्कथा सम्यगुक्ता ॥३४॥
एवं चित्रं चरित्रं गदितमुपनिशम्याथ राज्ञा स पृष्टः
श्रीमन्मत्स्यावतारं व्यवृणुत निगमोद्धारणं पूर्वमब्धेः ।
राज्ञः सत्यव्रतस्य प्रळयदिनदृशिं नावि सप्तर्षिवर्यैः
साकञ्चात्मोपदेशं परत उपदिशन्नाचचक्षेऽस्य मुक्तिम्  ॥३५॥

स्कन्धेऽस्मिन् रत्नसङ्ख्ये रविकुलजनृपाः सोमवंश्याश्च भूपाः
कीर्त्यन्ते विस्तरेण प्रथितरघुपते वर्णना यस्य मध्ये ।
पुण्या बाभाति नूनं मणिरिव मकुटे यादवश्चेतिहासः
पापानां भञ्जकत्वे प्रथिततर उरोभूषणं सञ्चकास्ति ॥  ॥३६॥
सुद्युम्नस्त्रीत्व मादावकथय दथ चैक्ष्वाकवं सच्चरित्रं
पाषध्रं चाथ संवर्तककृतयजनोक्तिर्मरुत्तस्य राज्ञः ।
सोमेनामाद्यदिन्द्रः कनकपरिकरे यत्क्रतौ सर्वदेवाः
प्रत्यक्षं प्रत्यगृह्णन्नहमहमिकया दीयमानान् स्वभागान्  ॥३७॥
शर्यातेरप्युपाख्याविवरणवशतः च्यावनं सच्चरित्रं
प्रोक्तं यं वै सुकन्या च्यवनमुपगता तापसं वृद्धवृद्धम् ।
नासत्यानुग्रहेण स्मरसमवपुषं कान्तमालोक्य पित्रे
तत्वं व्याख्याय सर्वान् समधिगतवती मानुषालभ्यभोगान् ॥३८॥
पुण्यं चाथाम्बरीषं चरितमभिहितं क्रोधनित्यो महर्षिः
दुर्वासा येन भग्नः पुनरपि भगवच्चक्रनुत्या नृपेण ।
तस्मादुन्मोचितश्च द्रुहिणमधुरिपुत्र्यम्बकत्यक्तहस्तः
द्वादश्याख्यव्रतस्य प्रबलमहिमता स्पष्टिता च त्रिलोक्याम् ॥३९॥

चारित्रं यौवनाश्वं कथितमथ च मान्धातृराज्ञश्चरित्रं
पुङ्गभौ यत्र चेन्द्राकलिततदवनं सौभरेश्चाथ योहि ।
सङ्गान्मीनस्य तद्भूपतिदुहितृकरग्राहमाप्यास्वसङ्ख्यान्
पुत्रानुत्पाद्य पश्चाद्विरतिमुपगतो गर्हयन् सङ्गदोषम् ॥ ॥४०॥

हारिश्चन्द्रं चरित्रं कथितमथ महासंग्रहेणास्य पुत्रः
योऽजीगर्तात्मजेन स्वपितरमृणतोऽमोचयत्तच्चरित्रम् ।
पुण्या भागीरथी स्वस्सरिदिह गमिता येन तत्पूर्वजानां
व्याख्यायोदन्तमाजं दशरथगत मप्यूचिवान् रामकीर्तिम् ॥४१॥

आविर्भूतोहि विष्णुर्दशरथतनयो मैथिलीं चोपयेमे
साकं सौमित्रिणा स्त्रीसहित उदचलत् काननं तातवाक्यात् ।
पौलस्त्येनापनीता मपि निजमहिषी मानय द्राक्षसेन्द्रं
हत्वा युद्धे समूलं पुनरपि नगरीं प्राप्य पट्टाभिषिक्तः ॥४२॥

इत्थं रामायणं चोत्तरवरकथया साकमाख्याय पश्चात्
तत्पुत्रादेश्चरित्रं क्रमश उपसमाहृत्य वैदेहवंशम् ।
प्रस्तुत्यास्मिन्निमिं तन्मुखजनकमहीपालवंशं विशिंषन्
क्षोणीकन्यावतारादिमचरितमृषिः सर्वतोभद्रमूचे ॥ ॥४३॥

चान्द्रं वंशं विवक्षुः प्रथममिह जगा वैलवार्ता विचित्रां
प्रोक्ता पौरूरवस्यप्यथ महितगुणा गाधिवंशानुकीर्तिः ।
आर्चीकाख्यान मत्यद्भुतमथ भगवज्जामदग्न्यावतारः
संहारः कार्तवीर्यार्जुनधरणिपते र्दोस्सहस्रान्वितस्य ॥ ॥४४॥

आयुर्मुख्यान्नृपालान् सुविदितयशसो वर्णयित्वा महर्षिः
पुण्यं चाख्यातवांस्तत्सुतचरितमथो नाहुषं सच्चरित्रम् ।
यायातं पौरवं चाप्यवददथ शुभां प्राह दुष्यन्तवार्तां
तत्पुत्रस्याथ वृत्तं भरतनरपतेर्यत्प्रथा भारतस्य ॥ ॥४५॥

तस्यैवाथान्ववाये करुणरसभृतां रन्तिदेवस्य कीर्तिं
व्याचक्षाणः कुलेऽस्मिन् कृपमुखधरणीदेवजन्माप्यवादीत् ।
राजानं शन्तनुं चाप्यकथयदथ तत्पुत्रतत्पौत्रनप्तॄन्
पाण्डोः पुत्रान्निरूप्य द्रुपदनरपते वंशमप्याचचक्षे ॥ ॥४६॥
वैदर्भाश्चेदिवंश्या बहुनरपतयः कीर्तिता मागधाद्याः
प्रज्ञानेत्रस्तदीयाः शतमपि तनुजा यादवानां तु वंशे ।
कृष्णाविर्भावसूक्ति बलगदजननं चाथ तत्सन्ततौ ये
तेषां देव्यश्च तत्तत्सुतसरणिरथो कीर्तिता पापहन्त्री ॥ ॥४७॥

---

बिभ्रत्कोटीरशोभां शिरसिच वदने चन्द्रशोभां ललाटे
कस्तूरीदीप्तिमक्ष्णोः कमलरुचिमथ श्रोत्रयोः कुण्डलाभाम् ।
कण्ठे हारस्य शोभा मुरसि च कमलां पीतकौशेयशोभां
कट्यामङ्घ्रिद्वयेऽव्याद्विनतजनमनोभीष्टसिद्धिं हरिर्नः ॥ ❀
श्रुत्वा राज्ञां चरित्रं महितमथ महीनायको व्यासपुत्रं
भूयः पप्रच्छ विद्वन् यदुपतिचरितं विस्तरेणेरयेति ।
यस्मात् कृष्णो ममात्यादरभरविपयो जीवितं योऽदिशन्मे
मत्पूर्वेभ्यश्च योऽदाद्विजयमरिचमूसागरं तारयित्वा ॥ ॥४८॥
पृष्टः प्रोवाच हृष्टो मुनिरथ कथयन् उत्तमश्लोकवार्तां
राजानं श्लाघयित्वा प्रथममुरुभरात्पीडिताया धरित्र्याः ।
गोरूपेणाजसेवां सहसुरनिकरैः ब्रह्मणः सिन्धुतीर-
प्राप्तिं विष्णोः स्तुतिं तद्गगनवचनतः शान्तिमस्या ज्वरस्य ॥४९॥
देवानामंशभेदै र्यदुषु च जननं पूर्णरूपेण विष्णोः
शौरेरन्तः प्रवेशं तदनु भगवतो देवकीगर्भवासम् ।
ब्रह्मेशानादिभिस्तत्स्तुति मथ च जगौ रौहिणेयस्य जन्म
श्रीमत्कृष्णावतारं पितृकलितनुतिं देवकीस्तोत्रवार्ताम् ॥५०॥

यत्राजे जायमाने सति मुरजवरा दिव्यवाद्यन्त चित्तं
साधूनां स्वच्छमासीच्छुभसलिलवहाश्चापगा गन्धवाहः ।
वातिस्मात्यन्तसौख्यं त्रिजगति कलयन् पद्मषण्डानि भृङ्गैः
सन्नादीनि प्रपूर्णा ह्युपवनतरवो मत्तकूजद्विहङ्गैः ॥ ॥५१॥

शौरेरादाय बालं गमनमथ हरे रिच्छया गोकुलान्तः
तत्रैवैनं निधाय ग्रहणमथ ततो मायिकादारिकायाः ।
कंसे विज्ञापनाऽथ स्खलितपदगतेस्तस्य तद्घातयत्नः
हस्तात् भ्रंशश्च तस्या भयभरवशतो दीर्घचिन्ताज्वरोऽस्य ॥५२॥

दुर्मन्त्रैर्मन्त्रयित्वा सखिभिरथ महीदेववेदादिपीडा-
यत्न स्तोकेन पीतस्तनभवपयसा पूतनाया विमोक्षः ।
प्रोचे त्रैमासिकेनासुरतनुशकटोच्चाटनं ब्राह्मणाशी-
र्वादः कृष्णेन वात्याकृतिसहिततृणावर्तदैत्यस्य घातः ॥५३॥

विश्वं रूपं स्वकीयं प्रकटयितुमनाः स्वस्य मात्रे दयालुः
मृत्स्नामादाथ बाला निजगदुरथ सा तर्जयामास कृष्णम् ।
सोऽपि व्यादाय वक्त्रं सकलमपि जगत्तत्र मात्रा समं स्वं
सन्दर्श्यासीत् पुरेव प्रमुदितहृदया साऽपि चित्रीयतेस्म ॥५४॥

मथ्नन्तीं मातरं दध्यरुणदुपधिनाऽश्रूणि मुञ्चन् स्तनार्थी
क्रुद्धो रुद्ध स्तयाऽतिक्कथितमथ पयाऽश्मन्ततोऽधःश्रयन्त्या ।
आदायाश्मानमेषोऽप्यभिन दथ हरिर्मन्थभाण्डं यशोदा
कृच्छ्रेणैनं गृहीत्वा भगवदनुमतोलूखले तं बबन्ध ॥ ॥५५॥

वृक्षौ जातौ हि शापा दथ हरिरवगत्यात्मना तद्विमोक्षं
कर्तुं सङ्कल्प्य चित्ते गमन मकृत तद्भूरुहावन्तरेण ।
भग्नौ तेनाथ वृक्षौ सुरगानिमयितौ तौ च यक्षौ नकिञ्चित्
जज्ञे चात्याहितं श्रीरमणकरुणया व्यस्मयन्तेति गोपाः ॥५६॥

उत्पाताद्धि प्ररूढा बृहति विपिनके भूयसा न स्तदन्यत्
कान्तारं वीरुदम्बुप्रभृतिभरित मस्माभि रासेवितव्यम् ।
इत्थं निश्चित्य गोपा जलतृणबहुळं साधु बृन्दावनाख्यं
भेजुः पूर्णैरनोभिः पशुपपरिवृढैः सम्मतं कृष्णमत्या ॥ ॥५७॥

बृन्दारण्येऽपि वत्सासुरमयमवधी द्वत्सपालो बकं चा-
त्युग्रं रूपं दधानं दितिजमदलय त्तुण्डकोटीविदारम् ।
तत्सोदर्यं तथाऽघं फणधरवपुषं पर्वताकारमत्या
यातानन्तः सखीन् द्रागवितुमयमहन् भोक्तुमिच्छुः स्वयं तैः ॥५८॥

आद्यं चर्माथ बालास्त्वतिकुतुकजुषो वत्सरान्ते व्रजाय
प्रोचुश्चेति ब्रुवाणं मुनिमथ नृपतिः पृष्टवांस्तत्र हेतुम् ।
तत्राह व्याससूनुः स्मरणपुलकितो ब्रह्मदेवस्य मायां
विष्णोर्मायां तथाऽजस्तुतिमतिमहती मब्दपूर्तौ यथार्थाम् ॥५९॥

अन्या लीलाश्च बालोचितकृतिचतुरा दर्शयन् गोपनारी-
चेतांस्याह्लादयन् सन्नथ समधिगतः पाशुपाल्यं क्रमेण ।
काळीयाभिख्यसर्पं बहिरुदकमथोद्वासयन् सूर्यपुत्र्याः
तत्रामज्जयाकरोत्तत्फणशतनटनं तद्वधूभिर्नुतश्च ॥ ॥६०॥

गोपीवस्त्रापहाराभिधललितकला माचरन्नब्जनाभः
स्वं कान्तं प्राप्तुमिच्छूर्विवसनकलिता द्देवताहेळनाघात् ।
गोपीरामोचयंस्तद्वसनमपहरन्नारुरोहागमाग्रं
प्रादान्नानाप्रकारैरपि हरिरथ तद्याचिनस्तोषितश्च ॥ ॥६१॥

गोपैस्तप्तैर्निदाघे हरिरथ महितां साधु यज्वाङ्गनानां
भक्तिं विस्तारयन् सन् यजनजडमतीन् बोधयन् विप्रवर्यान् ।
याचित्वाऽन्नं क्षुधार्तावपि मितमभजन्नान्नमेभ्यस्तु तेषां
पत्नीभ्यो याचिताभ्यो बहुगुणमदनं प्राप ताश्चान्वमृह्णात् ॥६२॥

अद्रिं गोवर्धनाख्यं समुदहरदसौ सप्तरात्रं च रक्षन्
गोगोपालांश्च पीडामपि खलु शमयन् सर्वतो वर्षणोत्थाम् ।
शक्रेणागत्य धेन्वा सह भुवनपतेर्गोपतित्वेऽभिषेकः
दिव्योऽतानीति वार्ता शुकवरमुनिना विष्णुराताय सूक्ता ॥६३॥

द्वादश्यां नन्दगोपं निशि समुपगतं स्नातुकामं तटिन्यां
कालोऽयं नेति दूता जलपतिनिकटं निन्युरीशेच्छयैव ।
तद्बुध्वा सोऽपि गत्वा वरुणभुवनमत्यर्चितस्तेन तातं
विस्मेरं ह्यानिनाय स्वभवनमधिकं पूजितः पूजनीयैः ॥ ॥६४॥

मारं जेष्यन् सुखेन प्रभुरथ रजनौ वेणुनादं वितेने
येन व्यामुग्धचित्ताः स्वगृहपतिसुतान् संपरित्यज्य गोप्यः ।
कालिन्दीतीरमापुः कलिमलमथनोऽप्यात्मरामोऽपि तासां
भक्तिप्रावण्यकृष्टोऽरमयदुरुविधा दर्शयंस्ताश्च लीलाः ॥ ॥६५॥

राधावैवाहिकं चातनुत हरिरथो बालगोपालवेषः
या हि प्रेमार्द्रचित्ता यदुकुलपतिना स्कन्धमारोपिता च ।
पश्चादन्तर्हितस्तत्स्मयमुपशमयन्नन्यगोप्यश्च चिह्नैः
आलक्ष्यैतत् प्रगायन्त्यतिरुचिरगुणा नस्य कामार्द्रचित्ताः ॥६६॥

रासक्रीडां वितेने हरिरथ मुरलीगानसन्तोषिताभिः
गोपीभिर्यत्र कृष्णः प्रतिमहिलमभून्मण्डले मध्यगश्च ।
स्त्रीणां स्पर्शेन कासांचिदपि नयनयो र्हावभावैश्च हासैः
अन्यासां चापि वक्षोरुहकरकलनात् सर्वतः प्रीतिमाधात् ॥६७॥

धृत्वा माहोक्षरूपं दितिजमुपगतं द्रागरिष्टं च हत्वा
दावाग्नेर्मोचयित्वा पशुपशुपगणान् शङ्खचूडं निहत्य ।
पश्यन्तीषु प्रियासु स्वयमदिशदपि श्रीमदौज्ज्वल्ययुक्तं
रत्नं नीलाम्बराय प्रगुणगुणयुतः केशवोऽव्यात् सदा नः ॥६८॥

दैतेयं च प्रलम्बं धृतखरवपुषं धेनुकं घातयित्वा
ज्येष्ठेनाथाश्वरूपं दितिजमदलय ह्लेण्डमुन्मोचयन् सन् ।
हस्तं तस्यास्यमध्ये निहितमथ हरिर्वर्धयामास सद्यः
तेनासह्येन कुर्वन् परुषरवमयं मारितः केशवेन ॥ ॥६९॥

दुष्टान् दैत्यानितीशः शमनमनयदा सप्तमा द्वत्सरान्तात्
प्रागेवाचार्यगर्गः स्वकुलसमुचितं नामकर्माद्यकार्षीत् ।
पश्चात् कंसं जिघांसुस्सुरमुनिवचसा प्रार्थितोऽक्रूरनाम्ना
मातुर्भ्रातुस्समीपं धनुरपचितये साकमार्येण नीतः ॥ ॥७०॥

यः कंसादेशकालप्रभृति यदुपतेर्दर्शनं किं नु मे स्यात्
श्लिष्येत् प्रेम्णा स किं मां स्वकरसरसिजं मूर्ध्नि मे किं निदध्यात् ।
किंवा वैरित्वबुद्धिं मयिच नकलयेत् सर्वभूतान्तरात्मा
कामानित्थं वितेने पथि स तदधिकं मानितो गोकुलेऽभूत् ॥७१॥

मध्येमार्गं निमज्ज्याम्भसि परपुरुषौ वीक्ष्य तीरे रथस्थौ
तावेवावेक्ष्य मग्नः पुनरपि कलयन्नेत्रयोर्गोचरौ तौ ।
भूमौ तोयेऽन्तरिक्षेऽद्भुतमिह भवता किन्वदर्शीति पृष्टः
श्रीशेनाचष्ट दिव्यां स्तुतिमतिविमलां पूर्णवेदान्तसाराम् ॥७२॥

आयातो मातुलस्य प्रथममथ पुरीं रङ्गकारं न्यभाङ्क्षीत्
मालाकारस्य चादादतुलसुखमथो तन्तुवायस्य मुक्तिम् ।
कुब्जामृज्वीं व्यतानी दथ हरिरुशतीं सङ्गमं तामवादीत्
सत्कार्यं साधयित्वा पुनरभिलषितं साधयिष्ये तवेति ॥७३॥

चापस्याथावमर्दो गजपकुवलयापीडघातः सभायां
मल्लाजिर्मातुलस्य प्रसभमथवधो मञ्चतः पातयित्वा ।
देवैरामोदनं चाप्यथ निगडितयो र्मोक्षणं स्वीयपित्रोः
सान्त्वं राज्येऽभिषेको यदुकुलनृपते रुग्रसेनस्य चोक्तः ॥७४॥

रामश्रीकृष्णयोरप्युपनयन मथावन्तिपुर्यां निवासः
सान्दीपिन्याख्यसद्भूसुरवरनिकटे शिक्षणार्थं कलानाम् ।
विद्याया निष्क्रयार्थं मृतगुरुसुतमानीय दत्वा सजीवं
प्रत्यावृत्य स्वपुर्यां सुखमधिवसति श्रेरिता बन्धुमध्ये ॥ ॥७५॥

मन्नयूनो नोद्धवः स्यादिति यदुपतिना भक्तवर्यः स्वपित्रोः
गोपस्त्रीणां च सान्त्वं कलयितुमनसा प्रेषितो गोकुलाय ।
गत्वा चानन्दमापानवधिक मुपलभ्यासु भक्तेः प्ररोहं
साक्षाच्छिष्यो गुरोः प्राक्समधिगतनयोऽप्युद्धवो बुद्धतत्वः ॥७६॥

यः पूर्वं स्वस्य तासा मनुचितचरिताचारमूढाशयानां
दौत्यं हेयं स्म मेने यदुपतिवचसा केवलं स्वीचकार ।
सोऽयं तत्पादपांसू ननम दभिलषं स्तत्र गुल्मादिभावं
यस्माद्वेदान्तवेद्ये भगवति सुदृढां प्रेमभक्तिं गतास्ताः ॥७७॥

ताभ्यः सन्देशमुक्त्वा मधुकरमिषतस्ताभिरुद्गीतवृत्तो
मासान् द्वित्रानवात्सीत् सततहरिकथाशोभने गोकुलेऽसौ ।
अक्रूरं प्रैषयच्चाप्यथ खलु भगवान् हास्तिनं क्षेमवार्ता-
ज्ञानायासौ च कुन्तीविदुरसुबलजाजानिपार्थैरपूजि ॥ ॥७८॥

---

अस्तिः प्राप्तिश्च कंसप्रियतममहिळे मागधेन्द्रस्य पुत्र्यौ
तातस्यागारमेत्योचतु रथ चरितं कंसगं केशवस्य ।
सोऽपि श्रुत्वा रुषाऽऽगा द्रथगजतुरगानेकपादातयुक्तः
भूपालानां सखीनां समितिपरिवृतो हन्तुमायोधनेऽमुम् ॥७९॥

कृष्णश्चाऽऽष्टादशावृत्त्यपि मगधनृपं जीवशेषं विमुञ्चन्
देवर्षेः प्रेरणेनागतयवनभयात् द्वारकामब्धिमध्ये ।
निर्मायात्र प्रजाः स्वाः सुसुखमुपनिधायाव्रजंस्तेन वन्यां
पश्चाद्विद्राव्यमाणो गिरिकुहरवरेऽगात् स्वपन्तं नृपं तम् ॥८०॥

निद्राणं तं स रोषाद्धरिरिति यवनो बोधयन् पादघातात्
दग्धोऽभूत्तस्य दृष्ट्या प्रभुरथ मुचुकुन्देन खिन्नान्तरेण ।
स्तोत्रेण प्रार्थितोऽदात् क्षितिसुरजननं मोक्षमत्रेति चोक्त्वा
रेवत्याश्चाह वैवाहिकमथ हलिना प्राक्ककुद्मयङ्गजायाः ॥ ॥८१॥

रुक्मिण्युद्वाहवार्तां कथयितुमतुलां भीष्मकोदन्तमादा-
वुक्त्वा तत्सूनुपुत्रीजनन मकथय द्रुक्मिणो रुक्मिणीं तु ।
चैद्यायेच्छां प्रदातुं तरळितमनसा तातभीष्मेण तस्या-
नुज्ञा मुद्वाहदीक्षानियममपि जगौ शैशुपालं समस्तम् ॥८२॥

श्रुत्वोदन्तं स्वघातोपममथ सुदती कञ्चिदाहूय विप्रं
सप्तश्लोक्या निनाय प्रियतमनिकटं प्रेमसन्देशवार्ताम् ।
यत्र श्रुत्वा गुणान् श्रीकमितरतितरां शोभनान् मानसं मे
मुक्तव्रीडं भवन्तं विशति तदबलां स्वीकुरुष्वेति चाह ॥ ॥८३॥

रुद्धामन्तःपुरान्तः कथमिव विवहेयेति चिन्ता न कार्या
पूर्वेद्युर्देव्युपास्त्यै समुपगतवतीं स्वां पुरीं प्रापयेति ।
श्रुत्वा विप्रेण साकं हरिरपि रथगः कुण्डिनं प्राप शीघ्रं
रुक्मिण्यप्याप गौरीसदनमपचितिं कर्तुकामा सखीभिः ॥८४॥

पूजां कृत्वा व्रजन्ती महरदथ हरिः पश्यतां भूपतीनां
भागं गोमायुमध्यात् स्वमिव मृगपतिः श्रीनिवासः श्रियं ताम् ।
भग्नं भूपालसूनुं नतवदनमथो राजभिस्सान्त्व्यमानं
दृष्ट्वा रुक्म्यद्रवत् स्वैस्सममतिरभसाद्धन्तुकामोऽम्बुजाक्षम् ॥८५॥

वैरूप्यं तस्य कृत्वा हरिरथ वसनैर्बन्धयित्वा मृगाक्ष्याः
अग्रे सङ्कर्षणेनानुनयमुपगतो मोचयित्वा कथञ्चित् ।
आगत्य द्वारकां श्रीपतिरपि विबुधैः स्तूयमानो मुनीन्द्रैः
पाणिं जग्राह भैष्म्या विधिवदनुमतो यादवैर्मोदमानैः ॥८६॥

प्रद्युम्नस्यावतारं क्रमिकमथ मुनिः प्रोचिवान् देवरातः
जातस्याब्धौ निरासं झषवरगिलनं शम्बराभ्याशयानम् ।
मायावत्यास्सकाशात् त्रिनयननिहतानङ्गतां स्वस्य बुध्वा
घातं दैत्यस्य रत्या सह निजजननीतातपार्श्वोपलम्भम् ॥८७॥

सत्राजित्संज्ञकोऽभूद्रविपरिचरणाल्लब्धरत्नः प्रसेन-
स्त्वादायागाद्वनंतन्मृगपतिनिहतश्चाथतन्मार्गमाणैः ।
कृष्णे मिथ्याभिशापः कलित इति जनैर्ज्ञाततत्वः स भीतः
तच्छान्त्यै शौरयेऽदादपि च बहुवृतां सत्यभामां स्वपुत्रीम् ॥८८॥

मिथ्यावादं प्रमार्ष्टुं बहुजनकलितं माधवोऽगाद्वनान्तं
तत्वर्क्षेशेन युध्वा मणिमलभत भूभृद्गुहायां स्यमन्तम् ।
तद्दत्तां कन्यकामप्युदवह ददिशन्मुक्तिमीशश्च तस्मै
यः श्रीरामावतारप्रभृति निजपदाम्भोजभृङ्गान्तरङ्गः ॥ ॥८९॥

आवन्तीं मित्रविन्दामपि परिजगृहे भ्रातृरुद्धां स्ववीर्यात्
सत्यां विध्वा वृषान्नस्युदवहदथ सप्तापि सप्ताकृतिस्सन् ।
इन्द्रप्रस्थे च काळिन्द्युपयममतनोत् पार्थसम्मानितस्सन्
भद्रायाश्चैव पाणिं हरिरथ जगृहेऽत्यादरेणार्पितायाः ॥ ॥९०॥

श्रीशः श्रीलक्ष्मणां चाकलितवरविधिं लक्ष्यवेधेन लेभे
स्वाचारं पालयन् सन् भुवि मनुजमनः प्रीणयन् भूरिरूपैः ।
एवं पाणींश्च गृह्णन् हरिरथ सुदृशां पञ्चया नित्ययुक्तः
कल्याणाकार एष प्रदिशतु भगवान् सन्ततं मङ्गळं नः ॥९१॥

हत्वा दैतेय माजौ हरिरथ नरकं राजकन्यासहस्रं
कारागेहे निरुद्धं सकरुणहृदयो मोचयन् भक्तिभाजाम् ।
तासां पाणीनगृह्णा द्युगपदथच तत्तुल्यसङ्ख्येषु गेहे-
ष्वावास्यापि स्वयं तत्समबहुतनुभाक् स्वे रतोऽरीरमत्ताः ॥९२॥

दुष्टं दैतेयमीशो मुरमथ विदधे प्रेतनाथातिथिं च
स्वर्लोकात् पारिजातं भुवमनयदपि प्रीणयन् सत्यभामाम् ।
देवेन्द्रस्यापि दर्पं व्यगमयदजया मोहितस्याब्जनाभः
योगक्षेमप्रणेता निजजनविततेः श्रीपतिः पालयेन्नः ॥ ॥९३॥

प्राद्युम्न्युत्पत्तिमूचेऽथ खलु परिणयं बाणपुत्र्या उषायाः
युद्धं बाणेन तद्दोर्दशशतदळनं शम्भुविष्णुज्वराजिम् ।
बाणस्यानुग्रहं चाप्यथ दशदशपुत्राप्तिमीशस्य दारे-
ष्वाख्यायर्षिर्बलस्य प्रथितमकथय द्यामुनाकर्षणाद्यम् ॥ ॥९४॥

यः श्रीरामावतारे द्विविदकपिरभूद्वानरेन्द्रस्य मन्त्री
तस्यौद्धत्यं युगेऽस्मिन् परिहृतमखिलं नीलवस्त्रेण नूनम् ।
सूतं हत्वा मुनीनां सदसि तदघमुन्मूलयंस्तन्निदेशात्
तीर्थान्याटाथ दुष्टं दितिसुतमवधीत् वल्वलाख्यं च देवः ॥९५॥

सांबं सम्मोचयिष्यन्नगमदथ पुरीं यः कुरूणाञ्च तत्र
क्रोधेनाकृष्टवांस्तत्पुरमिति बलभद्रेतिहासं समाप्य ।
विप्रेष्वत्यन्तभक्तेरनिशमपि नृभिः कार्यतायाः प्रसिध्यै
राज्ञो गोकोटिदातुर्द्विजगवहरणात् कार्कलासाप्तिरुक्ता ॥ ॥९६॥

राज्ञोऽथाजातशत्रो र्मखवरविधये दिग्जयार्थं गतेषु
भ्रातृष्वत्यन्तधृष्टं मगधनरपतिं दुर्जयं जेतुमीशः ।
भीमैन्द्रिभ्यां समेतः क्षितिसुरवपुषा भिक्षमाणस्तमाजिं
भीमेनाघातयत्तं विदलितविटपं दर्शयन् व्यत्ययेन ॥ ॥९७॥

राज्ञा यागे कृतेऽथाप्यवभृथदिवसे सभ्यसम्माननायां
अग्र्यं सम्मानमर्हत्ययमिति सहदेवोक्तिमालम्ब्य पार्थे ।
कृष्णं सम्पूजयत्युत्पथमथ बहुधा गर्हयंश्चेदिराजः
पश्यत्स्वेषु स्वधाम प्रति यदुपतिना नीत इत्याचचक्षे ॥ ॥९८॥

पौण्ड्राख्यं वासुदेवं निजसदृशतनुं हेलयाऽहन् दधानं
श्रीकृष्णो दन्तवक्रं विदुरथमपिचानीनयत् मृत्युलोकम् ।
काशीराजञ्च सौभं कलिसमवपुषं साल्वराजं च हत्वा
पश्चादापोशनं चातनुत यदुपतेर्दुष्टशिक्षैवमुक्त्वा ॥ ॥९९॥

भक्तानुग्राहकत्वं पुनरपि वदितुं वासुदेवस्य कार्ष्णिः
धर्मस्थापित्वमादौ कतिभिरपि शुभाध्यायवर्यैरवादीत् ।
पश्चाद्वक्तुं गृहस्थाश्रमसुखपरमाख्यानमारभ्य कान्ता-
नर्मोक्तिं वैणिकर्षे रथ हरिगृहितावीक्षणामोदमाह ॥ ॥१००॥

सौभद्रं चापि भद्रं परिणयमथ सङ्कीर्तयामास राज्ञे
वेदव्यासात्मजातो विजयकलितमारभ्य तीर्थाटनं प्राक् ।
तस्मै कर्मन्दिवेषाकलन मथ महीभृद्गुहायां निवासं
शुद्धान्तात् कन्यकायाः स्वनगरनयनं बन्धुसम्मानमञ्च ॥१०१॥

आदित्योपप्लवे श्रीहरिगतिमवदत् स्वैः प्रभासाय तस्मिन्
गोपस्त्रीसान्त्वनं सन्मुनिजननमनं याजनं तैः पितुश्च ।
पित्रोरध्यात्मबोधं जनकनृपमहीदेवयोस्साम्यदृष्टिं
प्रागेवाख्यत् सुदाम्नश्चरितमपि शुभं पार्थुकं यत्प्रसिद्धम् ॥१०२॥

यश्च श्रीकान्तभक्तः कुवसन इति संप्राप्तवान् सुप्रसिद्धिं
वित्तेहायुक्तपत्नीप्रहित उपगतो वासुदेवं शरण्यम् ।
तेन भ्रात्रा समानं महित उदधिजावीजितो भोजितश्च
प्राप्तः कौबेरलक्ष्मीं क्रमश उपययौ मुक्तिमात्यन्तिकीं च ॥१०३॥

श्रौतीं गीतां विवृण्वन् भृगुमुनिवचनात् सात्विकत्वं त्रिमूर्ति-
ष्वस्यैवेत्याह पश्चादथ शकुनिसुताख्यानकं रुद्रमोक्षम् ।
पार्थोक्तेः पालनं भूविवरगतहरिभ्रातृदृष्टिश्च मातु-
र्देवक्याः तत्र वेदाचानिनुतिमजितभ्रातृपूर्वेतिवृत्तम् ॥ ॥१०४॥

चन्द्रक्षोणीधराम्भोनिधितरुपशुपक्ष्यादिमम्बोधनेन
स्त्रीणामालापवार्ता मतिमृदु कथयन् माधवे भक्तिगाढाम् ।
स्कन्धं चापूरयद्यो दशममपिवरः श्रेयसां भाजनं तं
तन्वा वाचा धिया चाखिलगुरुमुपयाम्यान्तरध्वान्तशान्त्यै॥१०५॥

---

स्कन्धेऽथैकादशेऽस्मिन् प्रथममकथयन्मौसलं द्वन्द्वयुद्धं
यत्र श्रीशेच्छया ते कुतुकितमनसो यादवाः सर्व एव ।
साकं साम्बेन याताः कुहचन समये तीरमब्धेर्मुनीनां
क्रोधोत्पादेन तेभ्यो यदुकुलनिधनं प्रापुरन्योन्यघातात् ॥१०६॥
जायन्तेयेतिहासेऽप्यवददतिसुखं भक्तिमार्गं च कर्मा-
नुष्ठानस्यापि रीतिं परमगहनमात्मेशतत्वावबोधम् ।
पूजारीतिं च विष्णोरवतरणभिदाश्चापि सङ्कीर्त्य पश्चात्
प्रोचे भक्तोत्तमानामपि सकलविधं लक्षणं व्याससूनुः ॥१०७॥
विष्णोर्वैकुण्ठगत्यै सकलदिविषदां प्रार्थनं तत्स्तुतिं च
श्रीकृष्णेनापि तत्सङ्कलनमथ विधेयोद्धवप्रार्थनां च ।
तस्मै तत्वोपदेशं सुमहितभगवद्गीतया तुल्यमाख्यत्
यस्मिन्नानागुरुभ्योऽधिगतमिदमिति क्षोण्यबादिभ्य ऊचे ॥१०८॥
क्षमायाः क्षान्ति जलेभ्यो मधुरगुणमगात् वह्नितोऽद्वैतबोधं
वायो र्व्याप्तिं नभस्तो विमलतरसुनिर्लेपतां मत्स्यतस्तु ।
आस्वादेच्छाभयं सद्धरिणनिवहतो गीतभीतिं तथाऽलेः
आघ्राणाद्भीतिमद्धा शलभपरिचयात् रूपभीतिं सुघोराम् ॥१०९॥
मातङ्गात् स्पर्शभीतिं मधुकरकुलतोऽसंग्रहं पिङ्गळायाः
दास्या नैराश्यसौख्यं भुजगवलयतः स्वीयगेहाप्रवृत्तिम् ।
कन्याहस्ताग्रभूषावलयपरिचयात् सङ्गदुःखं स्वयूथ्यैः
कापोतद्वन्द्वतोऽवैद्गृहिशिशुविषयस्नेहपाशोत्थदुःखम् ॥ ॥११०॥

स्वत्वस्वीकारदुःखं कुररविहगतो बाणकाराच्च बुद्धेः
ऐकाग्र्ये सौख्यमादा दजगरनिकटा दन्नकामाप्रवृत्तिम् ।
बालाद्दम्भाद्यभावं निजवपुरनुसन्धानतोऽगाज्जुगुप्सां
पारार्थ्यैकान्तजीवं धरणिरुहततेर्भास्करा च्छुद्धतां च ॥ ॥१११॥
चन्द्राद्वृद्धिक्षयित्वं जलधरनिवहा ल्लोकतापापनोदं
मोदं वेदार्थविद्भ्यो बहुविधविषयांश्चापि तत्तद्गुरुभ्यः ।
व्यज्ञासीद्योगिवर्य स्त्वमपि भव तथा बुद्धिमन्नुद्धवेति
श्रीमत्कृष्णेन वाक्यै रतिमधुरतमै र्बोधितो भक्तवर्यः ॥११२॥
आवन्त्योदाहृतेनाप्यकथि कृपणता दूरमुत्सारणीया
वैराग्यं ज्ञानमूलं प्रयतनमधिकं तत्र कार्यं त्वयेति ।
गीतस्यैलस्य पाठात् पुनरपि महिळासङ्गमत्यागयत्नः
कार्यः सर्वात्मनेतीरितमथ हरिणा प्रश्रितायोद्धवाय ॥ ॥११३॥
नोदेहो दुःखहेतु र्दशति हि रसनां स्वीयदन्तैः कदाचित्
नोदेवाः पाणिनाऽक्षि प्रतुदति विषये तत्र कस्मै प्रकुप्येत् ।
नोवा हेतुर्ग्रहास्ते खलु गगनचरा नापि कर्म प्रमातुः
सिद्धौ ह्येतच्च सिद्ध्येदिति विविधगतीर्दर्शयन्नन्वशात्तम् ॥११४॥
एवं शिष्यं गुरोस्तं मधुरिपुरनुशिष्यात्मनश्चापि देहं
विप्राणां सत्यवाक्त्वप्रकटनधिषणो व्याधविद्धं व्यमुञ्चत् ।
व्याधं तं चापि मुक्तं व्यधित भुवि भरं हारयित्वा समग्रं
वैकुण्ठं प्राप पूर्वप्रहितरथहयक्षत्तृकः श्रीपतिः स्वम् ॥ ॥११५॥

अन्त्ये स्कन्धे च कल्क्युद्भवमृषिरवदत् तन्निमित्तं च धर्म-
ग्लानिं तुर्ये युगेऽस्मिन् पितृसुतकलहस्त्रीपातिद्वेषणाद्यैः ।
मार्कण्डेयस्य वार्तां प्रळयदिनदृशिं चन्द्रचूडालगौरी-
सेवां न्यग्रोधपत्रोदरशयहरिणा तस्य संवादलीलाम् ॥ ॥११६॥

तत्पौराणप्रचारं सुमहितनरनारायणस्तोत्रवार्तां
पौराणग्रन्थसङ्ख्या मथ दिवसकरात् याज्ञवल्क्यागमाप्तिम् ।
शाखाभेदान् श्रुतीनां रविपरिगणनं मुक्तिवार्तां परीक्षि-
द्राजर्षे स्सर्पदंशादपि शुनकसुतादीन् मुनीन् प्राह सूतः ॥११७॥
स्कन्धार्थान् सङ्ग्रहेण स्वयमथ कथयन् तच्छ्रुतौ कीर्तने वा
येऽर्थास्तानीरयंस्तत्प्रचरणगतये वासुदेवं नमस्यन् ।
क्षेमं लोकस्य शंसन् मुनिरथ महतां मङ्गलानां निदानं
गायत्र्यर्थं स्मरन्सन्नतनुत महितां ग्रन्थरत्नस्य पूर्तिम् ॥ ॥११८॥

---

योमां पद्यैश्शतेन प्रणय भगवदाख्यानमित्यादिशच्छ्री-
कृष्णो भास्वत्किरीटः स्मितमुखकमलः पुण्डरीकायताक्षः ।
शङ्खी चक्री च पीतं वसनमपि दधत् कौस्तुभं वैजयन्तीं
श्रीवत्सश्रीयुतोराः कमलमृदुपदो मङ्गळं नस्स देयात् ॥ ❋

एतत् पारमहंस्यधर्मबहुळं शान्त्यादिसंवर्धकं
कामादेः प्रतिरोधकं भगवति प्रेमर्द्धिसन्दायकम् ।
भक्तिज्ञानविरागयोगजननद्वाराऽसकृच्छृण्वतां
ब्रह्मात्मैक्यमितिं प्रसाद्य चरितं छिन्द्यादविद्यामपि ॥१॥
श्रीमद्भागवतं पुराणममलं वैयासकेरास्यतो
जातं ग्रन्थसहस्रकैरपि दशाष्टाभिर्मितं प्रोज्ज्वलम् ।
तत्पद्यैस्तु समग्रहीच्छतमितैः श्रीरङ्गनेता सतां
मोदायेश्वरसेविनां विमलसद्बोधाय बोधैषिणाम् ॥२॥
रस्यं भागवतं फलं विगळितं वेदान्तकल्पद्रुमात्
पीयूषद्रवसंयुतं शुकमुखात् स्वादुत्वमासादितम् ।
तत्सारं चषके सुवृत्तशतके श्रीरङ्गनाथो न्यधात्
सेवन्तां परमादरेण रसिका वाञ्छन्ति ये निर्वृतिम् ॥३॥

वेदान्तपाठशालापण्डितरङ्गेशभक्तिसूत्रितया ।
भागवतस्रग्धरया भूषितकण्ठो विभातु गोपालः ॥४॥

तर्के माधवपण्डितं पदनये मेधाविनारायणं
साहित्ये नवबाणकृष्णविबुधं तन्त्रे मुनेर्जैमिनेः ।
धीराप्पादुरैशास्त्रिणं श्रुतिशिखास्वात्मज्ञरामाभिधं
सर्वत्रापि च यज्ञनाथमखिनं ध्यायामि चित्ते गुरून् ॥५॥

इति श्रीमल्लालुकुटीपुरे जगद्गुरु श्रीमच्छङ्कराचार्यप्रतिष्ठापितपूर्व श्रीकामकोटिकलाशालातः
अधिगतब्रह्मविद्येन· पयमार्नेरि ग्रामाभिजन विद्वद्वर श्रीरामस्वामिशास्त्रिणां
अन्तेवासिना; कुम्भघोणनगरे सुब्रह्मण्यार्ये निर्मित श्रीराममन्दिर
प्रतिष्ठापित अद्वैतवेदान्तपाठशालाध्यापकेन
आङ्करै रा. रङ्गस्वामिशास्त्रिणा विरचितं
स्रग्धरा भागवतं सम्पूर्णम् ॥
शुभमस्तु ॥

